याऽनेकत्र तथैकस्य स्थायिनः सा विरूपता।
विभावस्यैव वैरूप्यं स्थायिन्यत्रोपचर्य्यते॥ ९॥
अत्यन्ताभाव एवात्र रतेः खलु विवक्षितः।
एतस्याः प्रागभावे तु शुचिर्नोपरसो भवेत्॥ १०॥
केचित्तु नायकस्यापि सर्वथा तुल्यरागतः।
नायिकास्वप्यनेकासु वदन्त्युपरसं शुचिम्॥ ११॥
वैदग्ध्यौज्ज्वल्यविरहो विभावस्य विरूपता।
लतापशुपुलिन्दीषु वृद्धास्वपि स वर्तते॥ १२॥
स्थायिऽनोत्र विरूपत्वमेकरागतयाऽपि चेत्।
घटेतासौ विभावस्य विरूपत्वेऽप्युदाहृति॥ १३॥
शुचित्वौज्ज्वल्यवैदग्ध्यात्सुवेषत्वाच्च कथ्यते।
शृङ्गारस्य विभावत्वमन्यत्राभासता ततः॥ १४॥
समयानां व्यतिक्रान्तिर्ग्राम्यत्वं धृष्टताऽपि च।
वैरूप्यमनुभावादेर्मनीषिभिरुदीरितम्॥ १५॥
समयाः खण्डिताऽऽदीनां प्रिये रोषोदितादयः।
पुंसः स्मितादयश्चात्र प्रियया ताडनादिषु॥ १६॥
एतेषामन्यथाभावः समयानां व्यतिक्रमः।
बालशब्दाद्युपन्यासो विरसोक्तिप्रपञ्चनम्॥ १७॥
कटीकण्डूतिरित्याद्यं ग्राम्यत्वं कथितं बुधैः।
प्रकटप्रार्थनाऽऽदिः स्यात्सम्भोगादेस्तु धृष्टता॥ १८॥
एवमेव तु गौणानां हासादीनामपि स्वयम्।
विज्ञेयोपरसत्वस्य मनीषिभिरुदाहृतिः॥ १९॥
भक्तादिभिर्विभावाद्यैः कृष्णसम्बन्धवर्जितैः।
रसा हास्यादयः सप्त शान्तश्चानुरसा मताः॥ २०॥
एवमेवात्र विज्ञेया वीरादेरप्युदाहृतिः।

अष्टावमी तटस्थेषु प्राकट्यं यदि बिभ्रति ॥ २१ ॥
कृष्णादिभिर्विभावाद्यैस्तदाऽप्यनुरसा मताः ।
कृष्णतत्प्रतिपक्षाश्चेद्विषयाश्रयतां गताः ॥ २२ ॥
हासादीनां तदा तत्र प्राज्ञैरपरसा मताः ।
एवमन्येऽपि विज्ञेयास्तेऽद्भुतापरसादयः ॥ २३ ॥
उत्तमास्तु रसाभासाः कैश्चिद्रसतयोदिताः ।
भावाः सर्वे तदाभासा रसाभासाश्च के चन ॥ २४ ॥
अमी प्रोक्ता रसाभिज्ञैः सर्वेऽपि रसनाद्रसाः ।
भारत्याद्याश्चतस्रस्तु रसावस्थानसूचिकाः ॥ २५ ॥
वृत्तयो नाट्यमातृत्वादुक्ता नाटकलक्षणे ।

इति भक्तिरसामृतसिन्धावुत्तरविभागे रसाभासलहरी ॥ ९ ॥

ग्रन्थस्य गौरवभयादस्या भक्तिरसश्रियः ।
समाहृतिः समासेन मया सेयं विनिर्मिता ॥ १ ॥
गोपालरूपशोभां दधदपि रघुनाथभावविस्तारी ।
तुष्यतु सनातनोऽस्मिन्नुत्तरभागे रसामृताम्भोधेः ॥ २ ॥

इति भक्तिरसामृतसिन्धौ गौणभक्तिरसादिनिरूपणनामा
चतुर्थो विभागः ।

रामाङ्गशक्र १४६२ गणिते शाके गोकुलमधिष्ठितेनायम् ।
भक्तिरसामृतसिन्धुर्विटङ्कितः क्षुद्ररूपेण ॥ १ ॥

---

*** इति श्रीहरिभक्तिरसामृतसिन्धुः ***

**समाप्तः ॥**

---